योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM

Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 274 संस्कृत दैनिक/ प्रातः संस्करण | प्रयागराज 29 जुलाई 2021 गुरुवार | पृष्ठ-4 | मूल्य- 2 रुपये

### सुभाषितम्

अनादरो विलम्बश्च वै
मुख्यम निष्ठुर वचनम।
पश्चतपश्च पञ्चापि दानस्य
दूषणानि च॥

अर्थ – अपमान करके देना, मुंह फेर कर देना, देरी से देना, कठोर वचन बोलकर देना और देने के बाद पछ्चाताप होना। ये सभी 5 क्रियाएं दान को दूषित कर देती है।

### संक्षिप्तवार्ताः

#### चीनराष्ट्रे जातः प्रलयः भारताय मार्गदर्शकः भवेत् इति वैज्ञानिकाः

**देहरादून।** प्रकृतिदुरन्तान् निवारयितुं भारतेन ऊर्जोत्पादकनयेषु परिवर्तनानि आनेतव्यानि इति वैज्ञानिकैः निगदितम्। चीनदेशे जातः प्रलयः भारताय जाग्रतासूचना एवेति वैज्ञानिकाः अभिप्रयन्ति। गतसहस्रसंवत्सराभ्यन्तरे जातासु अतिवृष्टिषु अतिविपुला भवति इयम्। चीनादेशे सेण्ट्रल् हेन्नान् प्रविश्यायां भवति घटनेयम्। अतिवृष्ट्या जातेन प्रलयेन बहूनां जनानां जीवापायः अभवत्। सहस्रशः जनाः अन्यत्र नीतवन्तः च। बहवः सेतवः जलसंभरण्यः च जलसंभरणक्षमतां अतिक्रान्ताः। जलाप्लावितन दीभ्यः जलं प्रवाहमार्गेषु व्यत्ययं कृत्वा जलोपप्लुवं नियन्त्रणाधीनं कर्तुं सैनिकाः प्रयतन्ते।

## उत्तरप्रदेशस्य 33577सङ्ख्यकेषु ग्रामपञ्चायतेषु तीव्रतया क्रियते सुदृढीकरणस्य विस्तरस्य च कार्यम्

# त्रिषु मासेषु प्रत्येकं ग्रामपञ्चायतस्य भविष्यति स्वकीयः सचिवालयः

### ग्रामपञ्चायतेषु निर्मीयन्ते 24617सङ्ख्यकानि नूतनपञ्चायतभवनानि, निर्माणस्य कार्यं वित्त– आयोगेन मनरेगाद्वारा अपि करिष्यते

**लखनऊ।** प्रथमम् उत्तरप्रदेशे ग्रामपञ्चायतानां स्वकीयः ग्रामसचिवालयः पञ्चायतभवनं च भविष्यति । एतयोः ग्रामस्य जनेभ्यः सरलतया सर्वकारस्य कल्याणकारीयोजनानां लाभः तु प्राप्स्यते एव साकमेव वित्तकोषस्य सुविधा अपि उपलप्स्यते । सर्वैं नवीनैः अत्याधुनिकैः उपकरणैः युक्तं ग्रामसचिवालयस्य भवनं दर्शनेन एव भविष्यति । एतयोः जनसुविधाकेन्द्रम् अपि भविष्यति वित्तकोषस्य सेवां प्रदातुं बीसीसखी अपि उपवेक्ष्यति। ग्रामपञ्चायतानां कार्यप्रणाल्याः कृते व्यवस्थितं स्वरूपं प्रदातुं प्रदेशसर्वकारेण बहुतीव्रतया कार्यं क्रियते । सर्वकारेण एतन्निमित्तम् अग्रे त्रिषु मासेषु सर्वेषु ग्रामपञ्चायतेषु ग्रामसचिवालयभवनानि ग्रामपञ्चायतभवनानि च स्थापयितुं निर्देशः दत्तः । सर्वकारस्य अनेन प्रक्रमेण ग्रामस्य जनेभ्यः वृहद् सुविधा प्राप्स्यते । विकासकार्याणां गतौ प्राप्तौ सत्यां ग्रामवासिनां समस्या पूर्वारभ्य न्यूनसमये निस्तारिता भवितुं शक्ष्यति । उत्तरप्रदेशस्य 33577सङ्ख्यकेषु ग्रामपञ्चायतेषु पूर्वारभ्यः एव पञ्चायतभवनानि निर्मितानि । एतेषु पञ्चायतभवनेषु सुदृढीकरणस्य विस्तारस्य च प्रक्रिया अग्रे त्रिषु मासेषु पूर्णीकर्तुम् अधिकारिणः उक्ताः। सर्वाकारस्य योजना प्रदेशे 24617सङ्ख्यकपञ्चायतभवनानां निर्माणस्य अस्ति । एतेषु 2088सङ्ख्यकाः राज्यग्रामस्वराजाभियानान्तर्गतं निर्माणस्य सन्ति । यद्यपि 22529सङ्ख्यकाः वित्त–आयोगस्य मनरेगायोजनान्तर्गतं स्वीकृत्य निर्माणस्य सन्ति । एतानि सर्वाणि 24617सङ्ख्यकानि निर्माणाधीनानि पञ्चायतभवनानि अपि सर्वकारेण युद्धस्तरे अग्रे त्रिषु मासेषु पूर्णरूपेण सिज्जीकर्तुम् उक्तानि। सर्वकारेण ग्रामसचिवालयाय फर्नीचरसामग्रीः उपकरणानि च आपूर्त्य तानि सुसज्जितुम् उक्तानि। तेषु सङ्गणकानां, अन्तार्जालस्य च व्यवस्था पूर्णा कर्तुं उक्ता। सर्वकारस्य योजना ग्रामसचिवालयेषु ग्रामस्य जनानां सुविधायै जनसेवाकेन्द्रस्य स्थापनां कर्तुम् अपि च बीसीसख्यै अपि उपवेष्टुं स्थानम् उपलब्धव्यम् अस्ति ।

### ग्रामसचिवालयेषु उपस्करसामग्री, सङ्गणकम्, अन्तर्जालव्यवस्थां च सुनिश्चेतुं निर्दिष्टम्

#### योगिसर्वकारे पञ्चायतीराजव्यवस्था दृढताप्राप्त



ग्रामे–ग्रामे विकासाय गतिं प्रदातुं पञ्चायतीराजव्यवस्थां दृढीकर्तुं च संलग्नेन राज्यसर्वकारेण सर्वेषु ग्रामपञ्चायतेषु ग्रामपञ्चायतकार्यालय भवनस्य सुदृढीकरणस्य, विस्तारस्य नव–निर्माणस्य च कार्यं तीव्रतया कृतम्। ग्रामसचिवालयानां स्थापना अपि सर्वकारस्य अभिनवप्रयोगः अस्ति येन आगमिष्यमाणे समये ग्रामीणजनेभ्यः वृहद् लाभः प्राप्स्यते । अवधातव्यं यत् प्रदेशे सर्वकारस्य अधिकारप्राप्तेः अनन्तरम् एव योगिना आदित्यनाथेन ग्रामस्य प्रत्येकं व्यक्तिपर्यन्तं सर्वकारस्य कल्याणकारिणीयोजनानां लाभप्राप्तेः प्रयासाः कृताः । ग्रामे–ग्रामे स्वच्छतां प्रति बलं प्रदातुं विशेषस्वच्छताभियानानि सञ्चालितानि । ग्रामस्य महिलाः सशक्तकर्तुं प्रयासाः कृताः । एतावत् एव न अपितु कोरोणाकाले ग्रामं–ग्रामं प्रति चिकित्सासुविधा उपलब्धकरणेन सह जीवनं जीविकां च रक्षणस्य वृहत् कार्यं कृतम् ।







ग्रामसचिवालयेषु जनसेवाकेन्द्रम् अपि भविष्यति अपि च वित्तकोषस्य सेवां प्रदातुं बीसीसखी अपि उपवेक्ष्यति

# शस्यविविधीकरणयोजनया परिवर्तितं पश्चिमोत्तर प्रदेशस्य चित्रम्

**योजनायाः लाभः कृषकेभ्यः दापयितुं सर्वकारेण व्ययीकृतानि 61.54कोटिमितानिरुप्यकाणि, कृषकेभ्यः उन्नतिशीलानि कृषियन्त्राणि अपि वितरितानि**

**लखनऊ।** कृषकाणां हितं सर्वोपरि स्थापयता योगि सर्वकारेण कृषकेभ्यः लाभप्रदानां शस्यानां कृषिं कर्तुं वृहद् अवसरः प्रदत्तः। अस्य सर्वतोऽधिकलाभः पश्चिमोत्तरप्रदेशे जातः। तत्र एकादशभिः धान्य बाहुल्य जनपदैः सह एटा-कासगञ्ज-जनपदयोः कृतेपि प्राप्तः । अत्र ताम्बूल-कृषेः आश्रिताः कृषकाः अधुना मासः, मुङ्गं, प्रियङ्गुः, मक्कई, तिल, आढिकी, कलायः, सूपबीज, चेत्यादिनां कृषिः आरब्धवन्तः। सर्वकारस्य अनेन उपक्रमेण कृषकानां वृत्तिः वर्धिता। साकमेव उत्तर प्रदेश कृषि विविधीकरण परियोजनया संयुज्य तेभ्यः आत्मनिर्भरत्वमवाप्तुम् अपि वृहद् अवसरः प्राप्तः ।

परियोजनया योजितकृषकैः पश्चिमोत्तरप्रदेशे 82000हेक्टेयरमिते अतिरिक्तक्षेत्रे धान्यस्य शस्यं विभिन्नन्यूनजलापेक्षिते शस्ये च परिवर्तितम् । सर्वकारेण 2017-18तमे वर्षे ताम्बूलस्य शस्यानि अन्येषु लाभप्रदशस्येषु परिवर्तनस्य योजना सञ्चालिता । शस्यविविधीकरणयोजनान्तर्गतं एकादशजनपदेषु धान्यकृषेः वर्धनम् अभवत् । कृषकैः न्यूनजलापेक्षितानां शस्यानाम् उप्तिः आरब्धा । अस्यान्तर्गतं पश्चिमोत्तरप्रदेशे मासस्य 40498हेक्टेयरमिते, मुदगस्य इत्यस्य 1823हेक्टेयरमिते, प्रियङ्गोः 19927हेक्टेयरमिते, मक्कय्याः 6631हेक्टेयरमिते, तिलस्य 306हेक्टेयरमिते, आढिक्याः 3361हेक्टेयरमिते, कलायस्य 1516हेक्टेयरमिते, पॉपलर इत्यस्य 260हेक्टेयरमिते, यूकेलिपटस इत्यस्य 750हेक्टेयरमिते, सूपबीजस्य च 600हेक्टेयरमिते क्षेत्रे शस्यानि उत्पादितानि । आहत्य 76000हेक्टेयरमिते क्षेत्रे उत्पन्नैः एतैः शस्यैः कृषकेभ्यः बहुलाभः प्राप्तः । प्रदेशे कृषिकार्यस्य वर्धनेन सह कृषकान् प्रोत्साहनं दातुं संलग्नेन राज्यसर्वकारेण स्वकीये कार्यकाले ग्रामस्य चित्रपरिवर्तनस्य कार्यं कृतम् । शस्यविविधीकरणयो जनायाः लाभः कृषकेभ्यः दापयितुं सर्वकारेण 61.54कोटिमितानां रुप्यकाणां व्ययः कृतः । कृषकेभ्यः योजनान्तर्गतं 741सङ्ख्यकानां बहुशस्य गाहनयन्त्राणां, 966सङ्ख्यकानां रोटावेटर यन्त्राणां, 172सङ्ख्यकानां जीरोटिलसीडड्रिल यन्त्राणां, 1425 सङ्ख्यकानां शक्ति–अभिसिञ्चयन्त्राणां सदृशानि उन्नतिशीलकृषियन्त्राणि वितरितानि। क्षेत्र पर्यन्तं सरलतया जलस्य उपलब्धतायै कृषकेभ्यः 299सङ्ख्यकपम्पयन्त्राणि, 717सङ्ख्यकसिञ्चननलिकाः अपि च 1246सङ्ख्यकानि लेजर– लैण्ड– लेवलर यन्त्राणि च अपि दत्तानि ।

**एकादशभिः धान्यबाहुल्यजनपदैः सह एटा-कासगञ्ज-जनपदयोः कृषकेभ्यः चतुर्वर्षेषु सर्वकारेण दत्तः महान् लाभः**

**ताम्बूल-कृषेः स्थाने कृषकैः कृता मासः, मुङ्गः, प्रियङ्गु, मक्कई, तिल,आढिकी,कलायः, सूपबीज, चेत्येषां कृषिः**

**योजनान्तर्गतं 82000हेक्टेयरमितं अतिरिक्तक्षेत्रे धान्यस्य शस्यं विभिन्नन्यूनजलापेक्षिते शस्ये च परिवर्तितम्**



## अर्जन्टीनेषु तटाकस्य वर्णः पाटलः अभवत् जनाः आशंकुलाः जाताः

**ट्रेल्यू /अर्जन्टीना ।** अर्जन्टीनेषु दक्षिणपाट्टगोणिया प्रविश्यस्थं एकं तटाकं पूर्णतया पाटलवर्णमभवत्। एतत् आपत्सूचना इति वैज्ञानिकाः अभिप्रयन्ति। गङ्गाटोपस्य विदेशविक्रयणाय अपर्युषितार्थम् उपयुज्यमानस्य रासवस्तुनः प्रभावेनैव मलिनीकरणमिदं अभवत् इति वैज्ञानिकाः तथा परिस्थितिसंरक्षणप्रवर्तकाः च वदन्ति। मत्स्यसंस्करणशालासु उपयुज्यमानस्य सोडियं सल्फैट्ट् नाम लवणस्य सान्निध्येनैव तटाकजलं पाटलायितमिति उह्यते। कोफी तटाकः तथा प्रदेशे विद्यमाना नि अन्यानि जलस्रोतांसि च स्वस्य जलप्रवाहेन सम्पुष्टीक्रियते चुबट्टू नदिना। अनया नद्या द्वारा सर्वत्र मालिन्यस्य प्लावनम् अभवत्। एतदेव अस्य तटाकस्य एतादृश्याः अवस्थायाः कारणत्वेन परिस्थितिसंरक्षकाः वदन्ति।



## वयोधिकेषु कोविड् प्रतिरोध क्षमता युक्तांशः न्यूनः इति अध्ययनफलम्

**नवदेहली।** वयोधिकेषु जनेषु कोविड् 19 वैराणुं प्रतिरोद्धुं क्षमतायुक्तांशः न्यूनः इति 'ओरिगण् हेल्त् आन्ट् सयन्स' विश्वविद्यालयस्य वैज्ञानिकैः कृताध्ययनात् अवगम्यते। प्रतिरोधसूच्यौषधं स्वीकृते अपि तेषां वृद्धानां स्थितिः न सुरक्षिता इति एते अभिप्रयन्ति। अमेरिकायाः वैद्यसंघातस्य पत्रिकायाम् प्रतिवेदनमिदं प्रकाशितं वर्तते। फैस'वाक्सिनस्य द्वितीयमात्रां स्वीकृत्य सप्ताहद्वयम् अतीतेषु 50 जनेषु आसीत् अध्यनम्। जना वयोभेदानुसारं श्रेणीकृत्य एव अध्ययनं प्रचालितम्।

वृद्धानपेक्षया युवकेषु सप्तगुणितः प्रतिरोधक्षमतांशः अस्ति इति अध्ययनप्रतिवेदनेन स्फुटीक्रियते। तथापि सर्वेभ्यः रोगतीव्रतायां न्यूनत्वं दातुं प्रतिरोधौषधं शक्तं भवति इति प्रतिवेदने दृढीकृतं वर्तते।

## सम्पादकीयम्

# सरलसंस्कृतस्य स्वरूपम्

सामान्यव्यवहारे सर्वैः अपि सरला भाषा प्रयोक्तव्या इत्यंशं प्रायः सर्वे अपि अङ्गीकुर्वन्ति । किन्तु अस्माभिः प्रयुज्यमाना भाषा सरला अस्ति, उत न इत्यत्र निर्णायकः अंशः कः इति प्रश्नः उदेति । यम् उद्दिश्य अस्माभिः भाषाप्रयोगः कृतः भवति सः जनः अस्माकम् अभिप्रायम् अवगन्तुं शक्तः, उत न इति अस्माभिः स्वयमेव आत्मा प्रष्टव्यः । यदि शक्तः स्यात् तर्हि अस्माकं भाषा सरला इति, यदि न शक्तः स्यात् तर्हि सरला नास्ति इति च आपाततः निर्णेतुं शक्यते ।

येन जीवने कदापि संस्कृतं न पठितं तादृशः कथं वा संस्कृतेन उक्तम् अर्थम् अवगन्तुं शक्नुयात् इति प्रश्नः भवति एव । किन्तु यां काञ्चित् भारतीयभाषां जानन्तः अपि जनाः सरलसंस्कृतेन उक्तम् अर्थम् अवगन्तुं शक्नुवन्ति इत्येषः बहूनाम् अनुभवः । यतः तैः अद्यपर्यन्तं संस्कृतभाषणं संस्कृतसम्भाषणं वा श्रुतं न स्यात् चेदपि बहून् संस्कृतशब्दान् तु ते जानन्ति एव । यतः सर्वासु अपि भारतीयभाषासु बहवः संस्कृतशब्दाः भवन्ति एव । संस्कृतशब्दाः इति अजानन्तः अपि ते तान् शब्दान् जानन्ति एव । ज्ञातानाम् एव शब्दानां प्रयोगः यदा श्रूयते तदा अर्थावगमनं न क्लेशाय । प्रायः सर्वासाम् अपि भारतीयभाषाणां वाक्य-रचना समाना। व्याकरणं च समानम् । बोधव्यवस्था अपि समाना प्रति-पादनरीती अल्पः भेदः स्यात् चेदपि एतेषु अंशेषु महत् साम्यं तु अस्ति एव । अतः मातृभाषां जानन् कोऽपि भारतीयः तस्याः भाषायाः संस्कारवशात् एव संस्कृतभाषां सुखेन अवगन्तुं शक्नोति ।

तथा च सरलं कठिनमिति वा निर्धारणे श्रोतृणाम् अवगमनानवगमने एव निमित्तभूते इति आगतम् । तत्र पुनः अयं प्रश्नः उदेति । कश्चन महाविद्वान् संस्कृतेन व्यवहृतवान् । तत्समाः पण्डिताः, तच्छिष्याः च तत् अवगन्तुं शक्ताः, यतः तेषां तादृशम् उत्तमं संस्कृतज्ञानम् अस्ति । पुनः पुनः तस्य मुखात् तादृशभाषणश्रवणेन ते तु

तदीयां भाषाम् अवगन्तुं क्लेशं न अनुभवेयुः । किम् एतां भाषां वयं सरलां भावयितुम् अर्हेम  न खलु  सा भाषा अत्यन्तं कठिना अपि भवितुम् अर्हति । केषाञ्चित् दृष्ट्या सा दुर्बोधा अपि भवेत् । कैश्चित् पाण्डित्यप्रकर्षप्रदर्शनाय लेखने सामान्यजनानाम् अपरिचिताः शब्दाः प्रयुज्यन्ते । 'त्वया निर्दोषं कथितम्' इति वक्तव्ये 'श्रीमतानादीनवमभ्यधायि' इति कथ्यते। 'दोष आदीनवः प्रोक्तः इति कोशं यः जानाति सः एव एतस्य वाक्यस्य तात्पर्यं परिजानाति । 'एतत् असन्दिग्धम्' इति वक्तव्ये 'एतदद्वापरम्' इति केचन कथयन्ति । 'विचिकित्सा तु संशयः । सन्देहद्वापरी च' इति कोशं यः जानाति सः एव अस्य तात्पर्यम् अवगच्छति । केचन दीर्घसमासान् क्लिष्टसन्धिबन्धांश्च कुर्वन्ति  एतादृशी प्रवृत्तिः भाषायाः दुर्बोधताम् एव सम्पादयेत्, नान्यत् किमपि । एवं तर्हि सरलता निर्णायकः मानदण्डः कः भवेत्  यं संस्कृतभाषाप्रयोगं श्रुत्वा सामान्यसंस्कृतज्ञानवान् संस्कृताभ्यासी, संस्कृतानभिज्ञः वा अर्थम् अवगन्तुं शक्नुयात् तदेव सरलसंस्कृतं नाम इति सामान्यतः वक्तुं शक्नुयाम वयम् वस्तुतः सरलसंस्कृते अपि स्तरद्वयं भवति अवगमनयोग्यः प्रयोगयोग्यः चेति । अद्यपर्यन्तं येन साक्षात् संस्कृतस्य अध्ययनं न कृतं तादृशः जनः अपि यत् श्रुत्वा कथयितुः आशयं क्लेशं विना सम्यक् अवगन्तुं शक्नुयात् सः भवति अवगमनयोग्यः स्तरः । सामान्यसंस्कृतज्ञानवान् संस्कृताभ्यासी कश्चित् यं स्तरम् अवलम्ब्य स्वस्य भावान् विना क्लेशम् अभिव्यञ्जयितुं शक्नुयात् सः भवति प्रयोगयोग्यः स्तरः इति अवगमनाय सामान्यः श्रवणसंस्कारः, केषाञ्चित् संस्कृतशब्दानां परिचयः, अवगन्तव्यम् इति अभिलाषः। इत्यादयः अपेक्ष्यन्ते । अस्मिन् स्तरे श्रोत्रा भाषानियमानां स्पष्टज्ञानं प्राप्तव्यं न भवति । तात्पर्यग्रहणमात्रम् अत्र इष्यते । वक्ता श्रोतृग्राह्यान् एव शब्दान्, श्रोतृग्राह्यां शैलीं च अवलम्ब्य वेगेन विना साभिनयं यदि संस्कृतेन वदेत् तर्हि अनधीतसंस्कृतः अपि श्रुता संस्कृतम् अवगन्तुं शक्नुयात् एव प्रयोगयोग्यता प्राप्तव्या चेत् तु भाषानियमाः स्पष्टतया ज्ञातव्याः एव भवन्ति । नियमज्ञानमात्रेण अपि न अलम् अपि तु तेषां नियमानां प्रयोगकौशलम् अपि तेन आप्तव्यं भवति। अतः प्रयोक्त्रा नियततया कश्चन भाषाभ्यासः अपि करणीयः भवति एव। अतः प्रयोगयोग्यस्तरप्राप्तिः परिश्रमसापेक्षः। एवं चेत् अनधीतसंस्कृतः अपि जनः अस्माभिः उक्तं यथा अवगच्छेत् तथा कर्तुं संस्कृतं सरलीकृत्य प्रयोक्तव्यं कम् इति कश्चन प्रश्नः उत्पन्नः भवेत्। न तथा संस्कृतस्य सरलीकरणं न उचितं, न अपेक्षितं च। सारल्यं संस्कृते इदानीमेव अस्ति । अत्र उदाहरणरूपेण महाभाष्यप्रयोगाः, शङ्कराचार्यभाष्यप्रयोगाः च बहुधा दर्शयितुं शक्याः । किन्तु आ बहोः कालात् बहुभिः कारणैः तत् सरलं (एग्स्ज्त) मुखं प्रदर्शितं न अभवत् अधुना अस्माभिः तस्य प्रदर्शनं करणीयम् तावदेव। एवं चेत् संस्कृतस्य सरलमुखस्य प्रदर्शनाय अस्माभिः केचन उपायाः अनुसर्तव्याः भवन्ति। यथा परिमितानामेव शब्दानां क्रियापदानां च उपयोगः, सरूपाणामेव शब्दानां क्रियापदानां च उपयोगः इत्यादयः। तन्नाम भाषाप्रयोगकर्ता स्वस्मिन् महति ज्ञाने सति अपि तत्र अत्यल्पमेव भागम् उपयुज्य व्यवहारं कुर्यात्। एतदर्थं तेन बुद्धिपूर्वकतया विशेषप्रयत्नः एव करणीयः भवति ।

# भारतवर्षस्य प्रथम ज्योतिर्लिंगम श्री सोमनाथ

भारत वर्षे द्वादश ज्योतिर्लिङ्गानि सन्ति । एतानि ज्योतिर्लिङ्गानि भारतवर्षस्य प्रथम ज्योतिर्लिंगम श्री सोमनाथः अस्ति। एतद सोमनाथ मन्दिरः विश्वप्रसिद्धः अस्ति।

श्री सोमनाथ मन्दिरस्य सुनिर्माणं मैत्रक गुर्जर वंशेन कृतं। अस्य पुनर्निर्माणं नागभट च मिहिरभोजेन कृतं।ऋग्वेदे सुसन्दर्भः अस्तिः अस्य निर्माणं स्वयमेव चंद्र देव कृतः श्री सोमनाथ मन्दिरः गुजरात प्रदेशे स्थितः अस्ति। एषः अर्वाचीन  अत्यन्त प्राचीन मन्दिरः सूर्य मन्दिरः अस्ति।

भारत वर्षे द्वादश ज्योतिर्लिङ्गानि सन्ति । एतानि ज्योतिर्लिङ्गानि भारतवर्षस्य प्रथम ज्योतिर्लिंगम श्री सोमनाथः अस्ति। एतद सोमनाथ मन्दिरः विश्वप्रसिद्धः अस्ति।

एषः मन्दिरः हिन्दू धर्मस्य उत्थान-पतनस्य इतिहासः प्रदर्श्यति। दुर्बुद्धि आक्रांता जनाः सोमनाथ मन्दिरः पुनः पुनः ध्वस्तः कृतं। पुनः पुनः पुनर्निर्माणं:अपि अभवत। भारत वर्षस्य स्वतंत्रता उपरान्ते अस्य सुपुनर्निर्माणं लौह पुरुष सरदार वल्लभ भाई पटेल महाभागस्य मार्गदर्शेन अभवत। 1 दिसम्बर तिथ्योः 1951 वर्षे भारत वर्षस्य प्रथम राष्ट्रपति डॉ राजेन्द्र प्रसाद महाभागेन सोमनाथ मन्दिरम राष्ट्रे समर्पितः। सोमनाथ राष्ट्रस्य सुप्रसिद्धः धार्मिक च पर्यटन स्थलः अस्ति। सम्पूर्ण विश्वात श्रद्धालु जनः सोमनाथे आगच्छन्ति च अवलोक्यन्ति ।

सोमनाथ मन्दिर प्रांगणे प्रतिदिनम संध्याकाले 7.30 तु 8.30 समये ध्वनि च प्रकाशः कार्यक्रमः भवति। अस्मिन कार्यक्रमे सोमनाथ मन्दिरस्य इतिहासस्य अद्भुत प्रदर्शनम अपि भवति।

सोमनाथ मन्दिरः सोमनाथ ट्रस्ट अधीनः अस्ति। ट्रस्ट अधीने उद्यानम च भूमिः अस्ति। ट्रस्ट हि सोमनाथ मन्दिरस्य आय साधनं अस्ति। एषः तीर्थः पितृ गणस्य श्राद्धार्थम अपि सुप्रसिद्धः अस्ति। चैत्र , भाद्रपद च कार्तिक मासे एतद स्थले श्राद्ध महत्वः अस्ति।अस्मिन समये श्रद्धालु बहुल स्थलः भवति। एतद स्थले त्रय सलिला हिरण ,कपिला, च सरस्वती संगमः अस्ति। संगमे स्नानस्य महत्वः अस्ति।

**सोमनाथ गुजरात प्रदेशात**
**प्रकाण्ड विद्वान  पण्डित अनिरुध्द पाठक**

# पुराणसाहित्ये अद्वैतप्रसङ्गः : वामनपुराणे ब्रह्मलक्षणम्

साम्प्रतं शोधपत्रस्य प्रस्तावितो विषयः वामनपुराणे अद्वैतचिन्तनम् । भारतीय परम्परायां मोक्षमार्गस्य गुरुत्वमतुलनीयम्, तत्र अद्वैतचिन्तनं खलु अन्यतम पन्था । वैदिकशास्त्रादारभ्य दर्शनसाहित्येषु अद्वैतचिन्तनस्य विविधानि तत्त्वानि विश्लेषितानि । अद्वैतमार्गस्य मूलप्रतिपादितविषयः 'ब्रह्म सत्यं जगन्मिथ्या, जीवब्रह्मैव ना-परः।' अपि च ब्रह्म निर्गुणं निर्विकल्पकं सर्वव्यापकं सच्चिदानन्दस्वरूपञ्चेति लौकिकधाराप्रवाहे पुराणसाहित्यानां सृष्टिः जाता। ब्रह्माविष्णुमहेश्वर-इत्याख्यानां देवतानां प्राधान्येन पुराणानि रचितानि। तत्र प्रपञ्चोऽपि सद्रुपेण स्वीकृतः। परन्तु तत्र अद्वैतचिन्तनस्य प्रभावः परिलक्ष्यते। आख्यानसूत्रानुसारेण विविधतया अद्वैतभावनायाः प्रसङ्गः पुराणग्रन्थेषु चर्चितः। अत्र ब्रह्म सगुणत्वेन वर्णितः। अस्मिन् सगुणब्रह्मप्राधान्यपुराणेषु निर्गुणब्रह्मप्रतिपादकानि अद्वैततत्त्वान्यपि च जीवानां सत्यत्वप्रतिपादकपुराणेषु ब्रह्म सत्यं जगन्मिथ्येति अद्वैतध्वनिः कथं प्रतिफलति, तदेवास्य शोधपत्रस्य निरूपणीय विषयः। मुख्यशब्दाः  वामनपुराणम्, ब्रह्म, अद्वैततत्त्वम्, प्रपञ्चः, वेदान्तम्, जगद्योनि इत्यादयः। प्रीयाद्धरिर्हरोऽनेन ब्रह्मानन्देन सर्वदा।  पायाच्च प्राणिनः सर्वान् स्वाश्रितान् शुद्धमानसान्। भारतीयशास्त्रपरम्परायां प्राचीनभारतीयसंस्कृतेः स्वरूपवर्णितेषु प्रमुखशास्त्रेषु पुराणमत्यन्तं गुरूत्वपूर्णम्। तदानीन्तन आध्यात्मिक-सामाजिक परिस्थितिनां कश्चित् शास्त्रसमुहः एव पुराणम् । कृष्णद्वैपायनवेदव्यासेन रचितमिदं पुराणशास्त्रम् । 'पुरा भवमिति' पुराणमित्यस्मिन्नर्थसंयोगेन प्रधानतया द्वैतशास्त्रत्वेन भजते शास्त्रमिदम्। 'पुरा नवं भवति' इत्यप्यवोचत् याष्काचार्यः । प्राचीनसमये पुराणं द्विविधात्मकमिति वर्णितम् , तत्र प्रथमं तावत् प्राचीनवृत्तविषयकानां विद्यास्वरूपम्, अपरं तु विशिष्टसाहित्येषु प्रयुक्तमानमुपलब्धिस्वरूपम् । वस्तुतः अस्मिन् पुराणशास्त्रे विविधदेवतानां तद्गतावतारांशानां च वर्णनं दृश्यते । मूलमहापुराणानि वैष्णवधर्मात्मकभक्तिविशिष्टत्वेन द्वैतसत्तात्मकेन विद्यमानानि भवन्ति । यद्यपि प्राचीन कालीन घटनानां नवरूपेणावलोकनमेव पुराणमिति व्युत्पत्तिदृष्टया ज्ञायते, तथापि भारतीय-परम्परानामाध्यात्मिक चेतनया विष्णुप्रभृतिनां देवानां गुणकीर्तनमेव पुराणेषु परिलक्ष्यते । तत्र पुराणविषये श्रुतौ उक्तमस्ति - 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहास पुराणं पञ्चमम्...।' पुराणं प्राचीनविषयानां संस्कृतिनामाधारग्रन्थः पञ्चमवेदो वा। एवञ्च पुराणसाहित्यं तस्येतिहासश्च पर्यालोचनानन्तर मिदं निश्चयेन वक्तुं शक्यो यत् इदं पुराणं प्राचीनराजवंशानां तद्गतराज्ञामाधारितचरित्रवंशेतिहासानामाकरग्रन्थः इति ।

# ॥ भवान्यष्टकम् ॥

गौरीशङ्करसर्वविश्वमखिलं नान्यत् परं दृश्यते
कैलासे वसतस्सुखेन गिरिजा शम्भुर्यथा सर्वदा।
नन्दीयुक्तगणेषु तत्र बहवो जीवा वसन्तो यथा
वैरं तेषु न दृश्यते च हृदये
शम्भोः कृपा सर्वदा ।।1।।
भिक्षापात्रकरः स एव भगवान्
काशीपुराधीश्वरश्  चान्नं  हेतुगतश्च मातृसदनं
काशीपुराधीश्वरेः । ब्रूते यः शिवशर्वरो
भगवतीं भिक्षां च देहि प्रिये
मातः ! रक्ष च सर्वलोकजनितान् जीवान्सदा भूतले ।।2।।
त्वं गौरी च उमा भवा च गिरिजा त्वं शङ्करी वै शिवा
नित्यानन्दकरी जगद्धितकरी प्रत्यक्षमाहेश्वरी ।
कौमारी शुभमङ्गला शुभकरी नित्यान्नदानेश्वरी
भिक्षां देहि सदा च पूरणपरा माता दयासागरी ।।3।।
त्वं विश्वेश्वरनायिका त्रिभुवना विज्ञानदीपाङ्कुरी
मुक्ताहारसुशोभिता शशिधरा गौराङ्गवर्णप्रभा।
काश्मीरा ननु शारदा कुसुमजा लक्ष्मीः सरोजस्थिता
आद्या देवि सदा त्रिलोकसुखदा  ज्ञानप्रदा या सती ।।4।।
त्वं माता च पिता सखी भगिनिका त्वं लोकलोकेश्वरी
त्वं बन्धुस्सुतदायिनी शुभकरी दाक्षायणी सुन्दरी ।
भक्ताभीष्टकरी सदा धनकरी पूर्णान्नदानेश्वरी
भिक्षां देहि सदा जनोदयकरी
मातान्नपूर्णेश्वरी ।।5।।
त्वं पाशाङ्कुशधारिणी
दिनकरी त्वं चन्द्रवर्णार्चिषा
त्वं दैत्येन्द्रसमूलनाशनकरी नेत्रत्रयोद्भासिता ।
सर्वज्ञा च सुरेश्वरी भगवती त्वं निर्धनानां धनं
नागाधीश्वरि कथ्यसे बुधजनैर्माता
त्रिलोकेश्वरी ।।6।।
सिंहस्था ननु भासते दिनकरी तारेषु चन्द्रो यथा
कण्ठे सुन्दरभूषणानि सततं केशाश्च कृष्णास्तथा ।
शोभन्ते वलयः करेषु तव वै तन्नूपुरौ पादयोः
रम्यास्सन्ति नखा वराश्च पदयोर्वन्दे सदा देविकाम् ।।7।।
त्वं दासेषु सदैव सत्करुणया दृष्टिं दधाना मुदा
त्वं मह्यं ननु देहि भक्तिमखिलां सेवे महाकालिकाम् ।
ये ये त्वां ब्रुवते भवानि मुनयो देवा नरा वै यथा
सायुज्यं तव पादयोश्च विपुलं यान्त्येव ते निर्भयाः ।।8।।
(शार्दूलविक्रीडितं छन्दः)

**डा. शिवानी शर्मा, जयन्तीपुरम्, हरियाणाराज्यम् ।**

# ऋग्वैदिकयुगे यथा समाजान्तर्गतानां नारीणामग्रणी भूमिकासीत्

ऋग्वैदिकयुगे यथा समाजान्तर्गतानां नारीणामग्रणी भूमिकासीत् तथा आधुनिके समयेऽपि भिन्नेषु क्षेत्रेषु नारीणां भूमिका अस्माकं दृष्ट्याकर्षणं करोति। भारतीयेतिहासे प्राचीन-मध्य-आधुनिक इति युगत्रयं वर्तते। तत्र प्राचीनस्तथा आधुनिके युगे नारीणामग्रणी भूमिका दृश्यते, किन्तु मध्ययुगे31 अस्माकं समाजे नारीणां स्वतन्त्रता न्यूनं परिलक्ष्यते। तथापि ख्रीष्टाब्दे 1236-शतके इल्तुत्मिसस्य सुयोग्या कन्या रजिया32 भारतवर्षस्य राजधान्याः दिल्याः सिंहासनं लब्धा, एतत् तु तस्मिन् समये नारीणां मर्यादा विषये एका सुमहती दृष्टान्ता। तथा च मध्ययुगे भक्तिवाद्यान्दोलनस्येतिहासे राजपूतकुलगौरवस्य शिशोदीय-राजपरिवारस्य वधू मीराबाइ अपरेका उल्लेखयोग्या दृष्टान्ता। परवर्तीनि समये अर्थात् आधुनिके समये क्रमेण नारीणां स्वतन्त्रता अधिकतया परिलक्ष्यते। 2003 ख्रीष्टाब्दे 'कल्पना चावला' नाम एका भारतीया महाकाशचारिणी महाकाशं गतवती, एतत् तु विस्मयजनकम्। अपि च वैदिकयुगतः आधुनिकयुगे शिक्षाव्यवस्थायामपि नारीणामग्रणी भूमिका कल्पनातीत। वर्तमानकाले न केवलं शिक्षायाः क्षेत्रे, सर्वत्रैव नारीणां भूमिका अस्वीकार्या। अस्मिन् समये विद्यालये महाविद्यालये तथा विश्वविद्यालये सर्वत्रैव पुरुषेण सह नारीणामंशग्रहणं समसंख्यकरूपेण परिलक्ष्यते। अध्यापनकार्येऽपि पुरुषेण सह नारीणां अग्रणी भूमिका प्रशंसायोग्या। अत एव ऋग्वैदिककालतः नारीणां उल्लेखनीया भूमिकासीद् अधुनापि भिन्नेषु क्षेत्रेषु अतीवोल्लेखनीया भूमिका स्वकीयगौरवात् तिष्ठति भविष्यति च एतस्मिन् विषये नास्ति किमपि सन्देहावकाशः।

सौराष्ट्रदेशे विशदेऽतिरम्ये
ज्योतिमर्यं चन्द्रकलावतं-
सम्  भक्तिप्रदानाय
कृपावतीर्णं तं सोमनाथं
शरणं प्रपद्ये
श्रीशैलशृङ्गे विबुधातिसङ्गे
तुलाद्रितुङ्गेऽपि मुदा
वसन्तम् तमर्जुनं मल्लिकपूर्वमेकं नमामि संसारसमुद्रसेतुम्
अवन्तिकायां विहितावतारं मुक्तिप्रदानाय च सज्जनानाम्
अकालमृत्योः परिरक्षणार्थं वन्दे महाकालमहासुरेशम्
कावेरिकानर्मदयोः पवित्रे समागमे सज्जनतारणाय
सदैवमान्धातृपुरे वसन्तमोङ्करमीशं शिवमेकमीडे
पूर्वोत्तरे प्रज्वलिकानिधाने सदा वसन्तं गिरिजासमेतम्
सुरासुराराधितपादपद्मं श्रीवैद्यनाथं तमहं नमामि
याम्ये सदङ्गे नगरेऽतिरम्ये विभूषिताङ्गं विविधैश्च भोगैः
सद्भक्तिमुक्तिप्रदमीशमेकं श्रीनागनाथं शरणं प्रपद्ये
महाद्रिपार्श्वे च तटे रमन्तं सम्पूज्यमानं सततं मुनीन्द्रैः
सुरासुरैर्यक्ष महोरगाढ्यैः केदारमीशं शिवमेकमीडे
सह्याद्रिशीर्षे विमले वसन्तं गोदावरितीरपवित्रदेशे
यद्धर्शनात्पातकमाशु नाशं प्रयाति तं त्र्यम्बकमीशमीडे
सुताम्रपर्णीजलराशियोगे निबध्य सेतुं विशिखैरसंख्यैः
श्रीरामचन्द्रेण समर्पितं तं रामेश्वराख्यं नियतं नमामि
यं डाकिनिशाकिनिकासमाजे निषेव्यमाणं पिशिताशनैश्च
सदैव भीमादिपदप्रसिद्दं तं शङ्करं भक्तहितं नमामि
सानन्दमानन्दवने वसन्तमानन्दकन्दं हतपापवृन्दम्
वाराणसीनाथमनाथनाथं श्रीविश्वनाथं शरणं प्रपद्ये
इलापुरे रम्यविशालकेऽस्मिन् समुल्लसन्तं च जगद्वरेण्यम्
वन्दे महोदारतरस्वभावं घृष्णेश्वराख्यं शरणम् प्रपद्ये
ज्योतिमर्यद्वादशलिङ्गकानां शिवात्मनां प्रोक्तमिदं क्रमेण
स्तोत्रं पठित्वा मनुजोऽतिभक्त्या फलं तदालोक्य निजं
भजेच्च ।

**: सैलाना मध्यप्रदेशस्य पंडित अनिल माणकलाल मेहता महाभागः**

# कंजलिगायनम्, शंखनाद प्रतियोगितायाः समुद्घाटनम् अकरोत् केशव प्रसाद मौर्यः

## 2025 तमस्य महाकुम्भम् आगतेसति प्रयागराजस्य कायाकल्पो भविष्यति

## सम्पूर्ण प्रयागराजस्य प्रमुख धार्मिक स्थलानां भव्यस्वरूपे सज्जायै कृत संकल्पः

**प्रयागराजः। वार्ताहरः।** कंजलिगायनम्, शंखनाद प्रतियोगितायाः समुद्घाटनम् अकरोत् प्रदेशस्य उपमुख्यमंत्री केशव प्रसादमौर्यः। बुधवासरे स्थानीयेनागवासुकि मन्दिरे प्रयागराज सेवा समितिः, अखिल भारतीय ब्राह्मण चेतना समितिः एतयोर्द्वयोः संयुक्ते तत्वावधाने समायोजितायाः कंजलियुद्धं एवं च शंखनाद प्रतियोगितायाः उद्घाटनम् मध्याह्नेकृतवान्। उपमुख्यमंत्री समागत्य प्रथमतः वैदिकमंत्रोच्चारपूर्वकम् आचार्याणा निर्देशने वासुकिनागस्य अर्चनं, पूजनंदर्शनं च कृत्वामंच प्रति प्रतस्थेतथा शंखनादेन सहतस्य स्वागतं अभवत्। उद्घाटन सत्रस्य मुख्य अतिथिः माननीयः केशव प्रसाद मौर्यः श्रीमद् रामानुजाचार्य जगद्गुरूः स्वामी श्रीधराचार्यः अध्यक्षः पं धर्मराज पाण्डेयः आसीत्। समारोहस्य संचालनंकुर्वन् पं फूलचन्द दुबे मुख्यातिथिभिः सहसर्वेषां अतिथीनाम् वाचिकं स्वागतं कृतवान्।

स्व उद्बोधने मुख्यातिथिः केशव प्रसादमौर्यः महाभागः प्रयागराजस्य कायाकल्पं कर्तुं प्रदेश सर्वकारस्य संकल्पं अभिव्यक्तवान्। सर्वेषां कृतेप्रणाम कुर्वन् सः आगामिनि 2022 वर्षेभव्यमाणे निर्वाचने पुनः सत्तासीन भाजपा दलस्य विजयी कर्तुंन्यवेदयत्। समारोह अस्मिन् भाजपा महानगराध्यक्षः गणेश केसरवानी, क्षेत्रीय उपाध्यक्षः काशी प्रान्तस्य अवधेश गुप्तः, शहर उत्तरी विधायक हर्षवर्धन बाजपेई, पूर्व विधायक करछना दीपक पटेलः महिला प्रकोष्ठस्य उपाध्यक्षाकाशीप्रान्त श्रीमती शशि वार्ष्णेयः, अनुपमा पाण्डेयः, तीर्थराज पाण्डेयः श्याम धर त्रिपाठी प्रभृतयः गणमान्य मनीषिणः उपस्थिताः आसन्। समारोहस्यान्तेमुख्य अतिथिना 21 आचार्याणाम् अंगवस्त्रम् आच्छाद्य सम्मानं च अकरोत्। धन्यवाद ज्ञापनं रामायण मेला समितेः महामंत्री अथ च अखिल भारतीय हिन्दी महासभा काशी प्रान्तस्य अध्यक्षः डॉ शम्भूनाथ त्रिपाठी अंशुलः कृतवान्। सायंकाले द्वितीय सत्रे शंखनाद प्रतियोगिता, कंजलि युद्धस्य प्रतियोगिता समारब्धा। अस्याः निर्णायकाः फूलचन्द्र दुबे, डॉ शम्भूनाथ त्रिपाठी अंशुलः राजेन्द्र कुमार तिवारी दुकानजी आसीत्।

छायाकारः सौरभ कुमार

## ।।गीतोपनिषद् ज्ञानामृतं।।

**गीताज्ञान संचरण समितिः, पटना, विहार, अध्यक्षः डॉक्टर सुदर्शन श्रीनिवास शाण्डिल्यः**

**॥ तेन मे युक्ततमा मताः॥**

मानवजीवनस्य सार्थक्यं प्रभुप्राप्तिरेव। एतदर्थं मानवजीवनं प्रभुकृपया मानवैः लब्धं।। न पशवः समर्थाः तेषां पार्श्वे सामर्थ्याभावात्। ।दृश्यतां विचार्यतां नूनं पुनर्जन्म भवति। ।संसारः दुःखालयः विषसमश्च। ।नानाजन्मतः संसार सम्बन्धः इन्द्रियेभ्यः रोचते।।तेन विविधानि कष्टानि अनुभूयन्ते मूढधियैः मानवैः।

जन्मतः एव प्राप्तपरिजनस्वजनसुखाय किं किन्न कुर्वन्ति मानवाः परं न भवन्ति ते प्रसन्नाः।स्व प्रसन्नाय आत्मकल्याणाय च न यत्नः क्रियते। । पुनरपि जननं तदर्थमेव धर्मः विहितः। सति जन्मनि एव महत् कष्टं। अतः भगवान् कृष्णः सदैव भृशं भृशं प्रतिपादयति गीतायां मां प्राप्य न पुनर्जन्म भवति। ।नित्यानन्दमवाप्स्यति।। परं भगवतः प्राप्तये भक्तिरेव परमं श्रेष्ठं साधनं। भक्तिप्रियो माधवः इति परमानुभूतिः सिद्धानां भगवत्प्रियाणां भक्तानां। तेन गीतायाः द्वादशाध्याये भगवान् सुस्पष्टं प्रतिपादयति ये मानवाः मामेव स्व सर्वस्वं मत्वा मदर्थमेव सर्वाणि कर्माणि कुर्वन्ति तेषां योग-क्षेमं स्वयमहं वहामि।

तथापि दुष्कृतिनः नराधमाः विषयोन्मुखाः प्रभुशरणापन्नाः न भवन्ति। शास्त्रवचनं साधुवचनं महताञ्चानुभवः गृहीतव्यः। रामचरितमानसे भगवाञ्छंकरः सहृदयं वदति

'उमा कहुं मैं अनुभव अपना।।
सत्य हरिभजन जगत् सब सपना'
इति तु स्वीकरणीयमेव। ।
।।सत्यं हरिभजनमेव।।हरे हरे हरे हरे

।।विमलः हिन्दीभावानुवादः।।

यह अनेक तर्कों तथा व्यावहारिक सिद्धांतों से अकाट्य सिद्ध है कि मनुष्य का पुनर्जन्म होता है। ।मैं दर्शन शास्त्र का छात्र अध्यापक रहा हूं। वहाँ एक अध्याय में चेतनप्राणी जन्म की विशद चर्चा है। भेद,स्वरुप का तार्किक विवेचन है। जिसमें भूत (मरणोपरांत अदृश्य स्वरूप विशेष) की भी चर्चा है। पाञ्जलयोगदर्शन में भी तार्किक प्रामाणिक विवेचन है पुनर्जन्म पुष्ट्यर्थ।। मैं झूठ नहीं कह रहा मेरी स्पष्ट सत्यानुभूति है मुझे एक बार भूत दर्शन तथा वाणी संवाद हुआ है। कुछ क्षण केलिए ही। अतः पुनर्जन्म अवश्य है। एक जन्म में परिवारों के मध्य कितना भीषण कुस्वभाव संघर्ष है। सबों का अपना अपना कुनिश्चय ,स्वार्थ, उद्वेग है। भीतर भीतर दूरी है ऊपर से पूरी अधूरी है विवशता निराशा हताशा का कुराज्य है। जीते जी जब यह है तो मरणोपरांत कौन किसका मरणोपरांत मात्र भय और लज्जा वशीभूत कुछ कृत्रिम कृत्य कर कर्तव्य का हवन कर दिया जाता है। फिर तो आगे आपका कृत कर्म ही पुनर्जन्म का निर्धारण करेगा।

एक साधु सरल प्रकृति का व्यक्ति जन्म से संसार प्रसन्न सुखी रखने के लिए अपार दारुण यातनाओं का वरण करता है, पर संसार सर्वतः कभी सन्तुष्ट नहीं हो पाता। जब ता संसार के इस विकृत स्वरूप का बोध होता है तबतक जीवनका तीन भाग व्यर्थ व्यतीत हो जाता है। इन सम्पूर्ण दुःखों की निवृत्ति प्रभुप्राप्ति से होगी। एतदर्थ गीता के 12 अध्याय में सरल सुगम साधन भक्तियोग का वर्णन किया गया है। वहाँ संसार वाला कष्ट दूर दूर तक नहीं। भक्ति प्रेम जिसमें मात्र मन दान करना है। इतने से ही परम प्रिय भक्त प्रिय भगवान् प्रसन्न होकर भक्त केलिए अपना जीवन समर्पित कर देते हैं। इतना ही नहीं अपने को भक्त के अधीन कर देते हैं। भागवत अहं भक्तपराधीनः। ऐसा संसार में भगवान् के अतिरिक्त कोई नहीं मिलेगा। हे मेरे आत्मीय जन अवश्य प्रभु प्रेम से मानव जीवन को सार्थक सफल करें। ।आत्यंतिक दुःख निवृत्ति का मार्ग साधन भगवान् की भक्ति है। भक्त और भगवान् के मध्य का सम्बन्ध शाश्वत अक्षुण्ण सुखद शुभद है। ।देह धरे का यह फल भाई। भजिअ राम सब काम विहाई। एतदर्थ कहीं जाने भागने भटकने की आवश्यकता नहीं है। जहाँ भी जिस स्थिति परिस्थिति में हैं वहीं से त्राण केलिए सच्चे हृदय से परम प्रिय मित्र प्रभु को पुव हरे मुरारे हे नाथ नारायण वासुदेव। यह भागवत महापुराण का महा मन्त्र है। प्रतिदिन जप करें।

**। जय श्रीकृष्ण। ।**

**प्रयागराजः। इनरह्वील क्लब ऑफ इलाहाबाद ऊर्जा तत्वावधाने छद्ममुखम् , प्रभृति वस्तूनि वितरयन् ।**

## रेलविभागस्य महाप्रबन्धकः 'कोर' इति विभागः एकां संगोष्ठीं आयोजितां कृतवान्

**प्रयागराजः।** रेलविभागस्य महाप्रबन्धकः 'कोर' इति विभागः एकां संगोष्ठीं आयोजितां कृतवान्। यस्यां विभागस्य सर्वे उच्चाधिकारिणः समागवन्तः। संगोष्ठ्यामेतन्निष्कर्ष्यं जातम्, यत् 'कोविड-19' इति विषाणुप्रभावतः कार्यं कुर्वन्तः ये कर्माचारिण अधिकारिणाश्च पञ्चत्वं गताः, तत्परिजनेभ्यः सर्वकारद्वारा उद्घोषिताः सुविधाः प्रदातुं सुचारूव्यस्थां कर्तव्या। 'कोर' इति परियोजनान्तर्गतं ये कर्माचारिण अधिकारिणश्च कार्यरताः सन्ति, तत्सर्वकर्मचारिणां कृते कोविडविषाणुतः सुरक्षादृष्ट्या सूच्यौषधं समयेन अवश्यमेव प्राप्तव्यमिति स्वास्थ्यदृष्ट्या सर्वेषां कृते लाभप्रदं भविष्यति। तत्र समुपस्थिताः सर्वेषां विभागानां विभागाध्यक्षाः स्वविभागस्य सम्बन्धितेषु सन्दर्भेषु परिचर्चां कृतवन्तः।

समापनसमये महाप्रबन्धमहोदयः 'कोर' इति विभागस्य निर्धारितं लक्ष्यं प्राप्तुं सर्वान् प्रेरितं कृतवान्।

## सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च , वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम्

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ।

अन्यत्र पुराणं द्वैतशास्त्रमिति द्वैताश्रयिनां मतम्। यतो हि पुराणेषु भक्तानां भगवतश्च वर्णनं प्राप्यते। तत्र विविधदेवताकनां तद्गतावतारांशानां वर्णनं दृश्यते। यथा विष्णुपुराणे विष्णोः तद्भक्तानाञ्च वर्णनम्, स्कन्धपुराणे स्वामिकार्तिकेयस्य शैवतत्त्वानां वर्णनमादीनि तत्त्वानि प्रस्फुटितानि। एवञ्च मूलाष्टादशपुराणेषु तत्र तत्र याः भक्त-भगवतयोः आख्यानमूलककथाः वर्तन्ते, तत्रैव द्वैतशास्त्रतत्त्वास्वादनं विहाय किञ्चित् भिन्नास्वादनमपि भवत्येव। वस्तुतः कानिचन पुराणानामध्ययनेन तथा पुराणस्थिततत्त्वानां विश्लेषणेन पुराणसाहित्यं सम्पूर्णतया द्वैतशास्त्रप्रतिपादिततत्त्वमेव विवृणोतीति भाषितुं विशयो उदेति। तत्र महापुराणेषु केषुचित् स्थानेषु द्वैतमतभिन्नत्वमस्तीति दृष्टान्तो।

## ।। शिव महिम्न स्तोत्रम्।।

**- डॉ तेज प्रकाश पूर्णानन्द व्यास**

श्रावण मास में भूत भावन शिव शंकर की सहजता सरलता सौम्यता सादगी का अवचेतन मन से पूर्ण श्रद्धा व समर्पण के साथ स्मरण करने से भोले ?शिव प्रसन्न होते हैं। महिम्न स्तोत्रम् में शिव के दिव्य स्वरूप एवं उनकी सादगी का सुवर्णन है। इस महिम्न स्तोत्र के पृष्ठ में अद्भुत अलौकिक सुंदर कथा प्रचलित है। चित्ररथ नाम का राजा था। वह भगवान शिव का अद्भूतब भक्त था। उसने एक अद्भुत सुंदर उद्यान निर्मित किया , जिसमें विभिन्न रङ्गों तथा खुशबुओं के पुष्प थे। प्रतिदिन दिन राजा उन पुष्पों से शिव जी की पूजा करते थे। फिर एक दिन पुष्पदंत नामक गन्धर्व उस राजा के उद्यान के समीप से जा रहे थे। उद्यान की अनुपम अद्भूत सुंदरता ने पुष्पदंत गंधर्व को आकर्षित किया ।पुष्पदंत ने उद्यान के पुष्पों को चुरा लिया। अगले दिन चित्ररथ को पूजा हेतु पुष्प प्राप्त नहीं हुए। उद्यान की अनुपम सुन्दरता और आकर्षक पुष्पों के सौंदर्य पर मुग्ध पुष्पदंत प्रातिदिन पुष्प की चोरी करने लगा। कौन पुष्पों को प्रातिदिन तोड़ ले जाता है ? राजा सारे प्रयत्नों उपरान्त भी राजा जान नहीं पाया कि उद्यान से पुष्प प्रतिदिन कौन चुरा ले जाता है ? क्योंकि पुष्पदंत अपनी दिव्य शक्तियों के कारण अदृश्य बना रहता था।

**राजा ने बुद्धिमत्तापूर्ण समाधान निकाला ।**

राजा चित्ररथ ने एक अद्भुत समाधान निकाला। उन्होंने शिव को अर्पित पुष्प एवं विल्व पत्रों को उद्यान में बिछा दिया। राजा के उपाय से अनभिज्ञ पुष्पदंत ने उन पुष्पों को अपने पैरो से कुचल दिया। इससे पुष्पदंत की दिव्य शक्तिओं का क्षय हो गया। पुष्पदंत स्वयं भी महान शिव भक्त था। अपनी त्रुटि का बोध होने पर उसने इस परम स्तोत्र के रचना की , जिससे प्रसन्न होकर महादेव ने उसकी गलती को क्षमा प्रदान कर पुष्पदंत के दिव्य स्वरूप को पुनः प्रदान किया।

**शिव महिम्न स्तोत्रम् :-**

**महिम्नः पारं ते परमविदुषो यद्यसदृशी**
**स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः**
**अथाऽवाच्यः सर्वः स्वमतिपरिणामावधि गृणन्**
**ममाप्येष स्तोत्रे हर निरपवादः परिकरः**

हे हर ! आप प्राणी मात्र के कष्टों को हराने वाले हैं। मैं इस स्तोत्र द्वारा आपकी वंदना कर रहा हूं जो कदाचित आपके वंदना के योग्य न भी हो पर हे महादेव स्वयं ब्रह्मा और अन्य देवगण भी आपके चरित्र की पूर्ण गुणगान करने में सक्षम नहीं हैं। जिस प्रकार एक पक्षी अपनी क्षमता के अनुसार ही आसमान में उड़ान भर सकता है उसी प्रकार मैं भी अपनी यथाशक्ति आपकी आराधना करता हूं।।

**अतीतः पंथानं तव च महिमा वाङ्मनसयोः**
**अतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि**
**स कस्य स्तोत्रव्यः कतिविधगुणः कस्य विषयः**
**पदे त्वर्वाचीने पतति न मनः कस्य न वचः**

हे शिव ! आपकी व्याख्या न तो मन, ना ही वचन द्वारा ही संभव है। आपके सन्दर्भ में वेद भी अचंभित हैं तथा नेति नेति का प्रयोग करते हैं अर्थात यह भी नहीं और वो भी नहीं... आपका संपूर्ण गुणगान भला कौन कर सकता है? यह जानते हुए भी कि आप आदि व अंत रहित हैं परमात्मा का गुणगान कठिन है मैं आपकी वंदना करता हूं।

**मधुस्फीता वाचः परमममृतं निर्मितवतः**
**तव ब्रह्मन् किं वागपि सुरगुरोर्विस्मयपदम्**
**मम त्वेतां वाणीं गुणकथनपुण्येन भवतः**
**पुनामीत्यर्थेऽस्मिन् पुरमथन बुद्धिर्व्यवसिता**

हे वेद और भाषा के सृजक जब स्वयं देवगुरु बृहस्पति भी आपके स्वरूप की व्याख्या करने में असमर्थ हैं तो फिर मेरा कहना ही क्या? हे त्रिपुरारी, अपनी सीमित क्षमता का बोध होते हुए भी मैं इस विश्वास से इस स्तोत्र की रचना कर रहा हूं कि इससे मेरी वाणी शुद्ध होगी तथा मेरी बुद्धि का विकास होगा।

**तवैश्वर्यं यत्तज्जगदुदयरक्षाप्रलयकृत्**
**त्रयीवस्तु व्यस्तं तिस्त्रुषु गुणभिन्नासु तनुषु .**
**अभव्यानामस्मिन् वरद रमणीयामरमणीं**
**विहन्तुं व्याक्रोशीं विदधत इहैके जडधियः**

हे देव, आप ही इस संसार के सृजक, पालनकर्ता एवं विलयकर्ता हैं। तीनों वेद आपकी ही संहिता गाते हैं, तीनों गुण (सतो-रजो-तमो) आपसे ही प्रकाशित हैं। आपकी ही शक्ति त्रिदेवों में निहित है। इसके बाद भी कुछ मूढ़ प्राणी आपका उपहास करते हैं तथा आपके बारे भ्रम फैलाने का प्रयास करते हैं जो की सर्वथा अनुचित है।

**किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं**
**किमाधारो धाता सृजति किमुपादान इति च**
**अतर्क्यैश्वर्ये त्वय्यनवसर दुःस्थो हतधियः**
**कुतर्कोऽयं कांश्चित् मुखरयति मोहाय जगतः**

हे महादेव ! वो मूढ़ प्राणी जो स्वयं ही भ्रमित हैं इस प्रकार से तर्क-वितर्क द्वारा आपके अस्तित्व को चुनौती देने की कोशिश करते हैं। वह कहते हैं कि अगर कोई परम पुरुष है तो उसके क्या गुण हैं? वह कैसा दिखता है? उसके क्या साधन हैं? वह इस सृष्टि को किस प्रकार धारण करता है? ये प्रश्न वास्तव में भ्रामक मात्र हैं। वेद ने भी स्पष्ट किया है कि तर्क द्वारा आपको नहीं जाना जा सकता।

**अजन्मानो लोकाः किमवयववन्तोऽपि जगतां**
**अधिष्ठातारं किं भवविधिरनादृत्य भवति**
**अनीशो वा कुर्याद् भुवनजनने कः परिकरो**
**यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे...**

हे परमपिता ! इस सृष्टि में सात लोक हैं (भूलोक, भुवलीक, स्वर्गलोक, सत्यलोक,महलीक, जनलोक, एवं तपलोक)। इनका सृजन भला सृजक (आपके) के बिना कैसे संभव हो सका? यह किस प्रकार से और किस साधन से निर्मित हुए? तात्पर्य यह है कि आप पर किसी प्रकार का संशय नहीं किया जा सकता।

**त्रयी साङ्ख्यं योगः पशुपतिमतं वैष्णवमिति**
**प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च**
**रुचीनां वैचित्र्यादृजुकुटिल नानापथजुषां**
**नृणामेको गम्यस्त्वमसि पयसामर्णव इव।**

विविध प्राणी सत्य तक पहुंचने के लिए विभिन्न वेद पद्धतियों का अनुसरण करते हैं। पर जिस प्रकार सभी नदी अंततः सागर में समाहित हो जाती है ठीक उसी प्रकार हर मार्ग आप तक ही पहुंचता है।

**महोक्षः खट्वाङ्गं परशुरजिनं भस्म फणिनः**
**कपालं चेतीयत्तव वरद तन्त्रोपकरणम् .**
**सुरास्तां तामृद्धिं दधति तु भवद्भूप्रणिहितां**
**न हि स्वात्मारामं विषयमृगतृष्णा भ्रमयति।**

हे शिव ! आपके भृकुटी के इशारे मात्र से सभी देवगण ऐश्वर्य एवं संपदाओं का भोग करते हैं। पर आपके स्वयं के लिए सिर्फ बैल (नंदी), कपाल, बाघम्बर, त्रिशुल, कपाल एवं नागमाला एवं भस्म मात्र है। अगर कोई संशय करें कि आप देवों के असीम ऐश्वर्य के स्त्रोत हैं तो आप स्वयं उन ऐश्वर्यों का भोग क्यों नहीं करते तो इस प्रश्न का उत्तर सहज ही है आप इच्छा रहित हैं तथा स्वयं में ही स्थितप्रज्ञ रहते हैं।

**ध्रुवं कश्चित् सर्वं सकलमपरस्त्वध्रुवमिदं**
**परो ध्रौव्याऽध्रौव्ये जगति गदति व्यस्तविषये**
**समस्तेऽप्येतस्मिन् पुरमथन तैर्विस्मित इव**
**स्तुवन् जिह्रेमि त्वां न खलु ननु धृष्टा मुखरता।**

हे त्रिपुरहंता ! इस संसार के बारे में विभिन्न विचारकों के भिन्न-भिन्न मत हैं। कोई इसे नित्य जानता है तो कोई इसे अनित्य समझता है। अन्य इसे नित्यानित्य बताते हैं। इन विभिन्न मतों के कारण मेरी बुद्धि भ्रमित होती है पर मेरी भक्ति आप में और दृढ़ होती जा रही है।

**तवैश्वर्यं यत्नाद् यदुपरि विरिञ्चिर्हरिरधः**
**परिच्छेतुं यातावनिलमनलस्कन्धवपुषः**
**ततो भक्तिश्रद्धा-भरगुरु-गृणद्भ्यां गिरिश यत्**
**स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्न फलति।**

एक समय आपके पूर्ण स्वरूप का भेद जानने हेतु ब्रह्मा एवं विष्णु क्रमशःप्रत्येक दिशा में गए। पर उनके सारे प्रयास विफल हुए। जब उन्होंने भक्ति मार्ग अपनाया तभी आपको जान पाए। क्या आपकी भक्ति कभी विफल हो सकती है।

**अयत्नादासाद्य त्रिभुवनमवैरव्यतिकरं**
**दशास्यो यद्बाहूनभृत-रणकण्डू-परवशान्**
**शिरःपद्मश्रेणी-रचितचरणाम्भोरुह-बलेः**
**स्थिरायास्त्वद्भक्तेस्त्रिपुरहर विस्फूर्जितमिदम्।**

हे त्रिपुरान्तक ! दशानन रावण किस प्रकार विश्व को शत्रु विहीन कर सका? उसके महाबाहू हर पल युद्ध के लिए व्यग्र रहे। हे प्रभु! रावण ने भक्तिवश अपने ही शीश को काट-काट कर आपके चरण कमलों में अर्पित कर दिया, यह उसी भक्ति का प्रभाव था।

**अमुष्य त्वत्सेवा-समधिगतसारं भुजवनं**
**बलात् कैलासेऽपि त्वदधिवसतौ विक्रमयतः**
**अलभ्यापातालेऽप्यलसचलितांगुष्ठशिरसि**
**प्रतिष्ठा त्वय्यासीद् ध्रुवमुपचितो मुह्यति खलः**

हे शिव ! एक समय उसी रावण ने मद् में चूर आपके कैलाश को उठाने की धृष्टता करने की भूल की। हे महादेव आपने अपने सहज पांव के अंगूठे मात्र से उसे दबा दिया। फिर क्या था रावण कष्ट में रूदन करा उठा। वेदना ने पटल लोक में भी उसका पीछा नहीं छोड़ा। अंततः आपकी शरणागति के बाद ही वह मुक्त हो सका।

**यदृद्धिं सुत्राम्णो वरद परमोच्चैरपि सतीं**
**अधश्चक्रे बाणः परिजनविधेयत्रिभुवनः**
**न तच्चित्रं तस्मिन् वरिवसितरि त्वच्चरणयोः**
**न कस्याप्युन्नत्यै भवति शिरसस्त्वय्यवनतिः**

हे शम्भो ! आपकी कृपा मात्र से ही बाणासुर दानव इन्द्रादि देवों से भी अधिक ऐश्वर्यशाली बन सका तथा तीनों लोकों पर राज्य किया। हे ईश्वर, आपकी भक्ति से क्या कुछ संभव नहीं है?

**अकाण्ड-ब्रह्माण्ड-क्षयचकित-देवासुरकृपा**
**विधेयस्याऽऽसीद् यस्त्रिनयन विषं संहृतवतः**
**स कल्माषः कण्ठे तव न कुरुते न श्रियमहो**
**विकारोऽपि श्लाघ्यो भुवन-भय-भङ्ग-व्यसनिनः**

देवताओं एव असुरों ने अमृत प्राप्ति हेतु समुन्द्र मंथन किया। समुद्र से मूल्यवान वस्तुएं प्रकट हुईं जो देव तथा दानवों ने आपस में बांट ली। पर जब समुद्र से अत्यधिक भयावह कालकूट विष प्रकट हुआ तो असमय ही सृष्टि समाप्त होने का भय उत्पन्न हो गया और सभी भयभीत हो गए। हे हर, तब आपने संसार रक्षार्थ विषपान कर लिया। वह विष आपके कंठ में निष्क्रिय हो कर पड़ा है। विष के प्रभाव से आपका कंठ नीला पड़ गया। हे नीलकंठ, आश्चर्य है की यह स्थिति भी आपकी शोभा ही बढ़ाती है। कल्याण कार्य सुन्दर ही होता है।

**असिद्धार्था नैव क्वचिदपि सदेवासुरनरे**
**निवर्तन्ते नित्यं जगति जयिनो यस्य विशिखाः**
**स पश्यन्नीश त्वामितरसुरसाधारणमभूत्**
**स्मरः स्मर्तव्यात्मा न हि वशिषु पथ्यः परिभवः**

हे प्रभु ! कामदेव के वार से कभी कोई भी नहीं बच सका चाहे वो मनुष्य हों, देव या दानव ही पर जब कामदेव ने आपकी शक्ति समझे बिना आप की ओर अपने पुष्प बाण को साधा तो आपने उसे तत्क्षण ही भस्म कर दिया। श्रेष्ठ जनों के अपमान का परिणाम हितकर नहीं होता।

**मही पादाघाताद् व्रजति सहसा संशयपदं**
**पदं विष्णोर्भ्राम्यद् भुज-परिघ-रुग्ण-ग्रह-गणम्**
**मुहुर्द्यौर्दौस्थ्यं यात्यनिभृत-जटा-ताडित-तटा**
**जगद्रक्षायै त्वं नटसि ननु वामैव विभुता।**

हे नटराज ! जब संसार कल्याण के हेतु आप तांडव करने लगते हैं तो आपके पांव के नीचे धरा कांप उठती है, आपके हाथों की परिधि से टकरा कर ग्रह-नक्षत्र भयभीत हो उठते हैं। विष्णु लोक भी हिल जाता है। आपकी जटा के स्पर्श मात्र से स्वर्गलोग व्याकुल हो उठता है। आश्चर्य ही है हे महादेव कि अनेक बार कल्याणकारी कार्य भी भय उत्पन्न करते हैं।

**वियद्व्यापी तारा-गण-गुणित-फेनोद्गम-रुचिः**
**प्रवाहो वारां यः पृषतलघुदृष्टः शिरसि ते**
**जगद्द्वीपाकारं जलधिवलयं तेन कृतमिति**
**अनेनैवोन्नेयं धृतमहिम दिव्यं तव वपुः**

आकाश गंगा से निकलती तारागणों के बीच से गुजरती गंगा जल अपनी धारा से धरती पर टापू तथा अपने वेग से चक्रवात उत्पन्न करती हैं। पर य उफान से परिपूर्ण गंगा आपके मस्तक पर एक बूंद के सामन ही दृष्टिगोचर होती है। यह आपके दिव्य स्वरूप का ही परिचायक है।

**रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो**
**रथाङ्गे चन्द्रार्कौ रथ-चरण-पाणिः शर इति**
**दिधक्षोस्ते कोऽयं त्रिपुरतृणमाडम्बर विधिः**
**विधेयैः क्रीडन्त्यो न खलु परतन्त्राः प्रभुधियः**

हे शिव ! आपने त्रिपुरासुर का वध करने हेतु पृथ्वी को रथ, ब्रह्मा को सारथी, सूर्य-चन्द्र को पहिया एवं स्वयं इन्द्र को बाण बनाया। हे शम्भु, इस वृहत प्रयोजन की क्या आवश्यकता थी? आपके लिए तो संसार मात्र का विलय करना अत्यंत ही छोटी बात है। आपको किसी सहायता की क्या आवश्यकता?

**हरिस्ते सहस्त्रं कमल बलिमाधाय पदयोः**
**यदेकोने तस्मिन् निजमुदहरन्नेत्रकमलम्**
**गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषः**
**त्रयाणां रक्षायै त्रिपुरहर जागर्ति जगताम्।**

जब भगवान विष्णु ने आपकी सहस्त्र कमलों एवं सहस्त्र नामों द्वारा पूजा प्रारम्भ की तो उन्होंने एक कमल कम पाया। तब भक्ति भाव से हरी ने अपनी एक आंख को कमल के स्थान पर अर्पित कर दिया। उनकी यही अदम्य भक्ति ने सुदर्शन चक्र का स्वरूप धारण कर लिया जिसे भगवान विष्णु संसार रक्षार्थ उपयोग करते हैं।

**-क्रमशः**

